सामान्यतः क्षत्रियपुत्रत्वकथनपूर्वकं स्वपितुः पादाभिवन्दनकरणम्, अथ पितुर्नमनानंतरं तेन सुनयाख्येन वैश्यपुत्रेण सह भद्रायुणा वैश्यपुरं प्रत्यागत्य निजमात्रे तस्मै पद्माकराख्याय वैश्यवर्याय च सर्वयुद्धादिवृत्तान्तनिवेदनम्, अथ द्वितीयेऽह्नि चन्द्रांगदापरपर्यायं चित्राङ्गदं नृपं प्रति तस्य पूर्वोक्तस्यर्षभाख्यशिवयोगिन आगमनं चित्रांगदं प्रति भद्रायुषे राजपुत्राय कन्याप्रदानार्थमुपदेशपूर्वकमाज्ञाकरणं च, तत ऋषभयोगिवचनाच्चित्राङ्गदेन भूपेन भद्रायुषमाहूय तस्मै कीर्तिमालिन्याख्यां निजकन्यां प्रदाय वैवाहिकविधिकरणाय समारम्भकरणम्, अथ तत्पितुर्वज्रबाहोः समीपे दूतं प्रेषयित्वा पुत्रस्योद्वाहार्थं सत्कारपूर्वकं निमन्त्रणम्, वज्रबाहोः सपरिवारस्य तत्र निषधेशराजधान्यामाग- मनम्, तस्यागतस्य पितुर्वज्रवाहोर्भद्रायुना पुत्रेणाभिवादनम्, तथाप्यविज्ञाततत्कु- लनाम्ना वज्रबाहुना तस्य भद्रायोर्जिज्ञासया प्रश्ने कृते सति निषधेश्वरेण वज्रबाहुं प्रति 'अयं त्वया मात्रा सह वने त्यक्तस्तवैव पुत्रो भद्रायुनामास्ति इति तस्य वृत्ते कथिते सति वज्रबाहोर्निजकर्मणः ससुतपत्नीत्यागरूपस्य लज्जया गर्हणानन्तरं प्रतापशालिनिजपुत्रप्राप्त्याऽत्यन्तानन्दप्राप्तिः, अथ चित्राङ्गदेन भूपेन कृतं पूजासत्कारमादायात्मनोऽग्रमहिषीं तां भद्रायोर्मातरं स्वस्नुषया समेतं भद्रायुषं स्वपुत्रं च गृहीत्वा वज्रबाहोर्निजपरिवारजनैः सह महता समारम्भेण सानन्दं स्वपुरीं प्रत्यागमनम्, ततो भद्रायुना पूर्वं पितुराज्ञया यौवराज्यं कृत्वा पितुः स्वर्गारोहणानन्तरं सर्वभूमण्डलराज्यकरणम्, राज्याधिरोहणानन्तरं भद्रायुना पूर्वं निबद्धस्य हेमरथाख्यमागधभूपस्य मैत्रीं संधाय बन्धनान्मोचनम्, ततो भद्रायुना स्वपत्न्या कीर्तिमालिन्या सह सुखोपभोगपूर्वकराज्यकरणम्, इत्थं पूर्वजन्मकृतशिवयोगिपूजासत्कारप्रभाववर्णनम् ..... ..... १९८ १

१४ अथ प्राप्तराज्यसिंहासनस्य भद्रायोः कदाचिन्निजभार्यया सह वनं गत्वा स्वच्छन्द- विहारकरणम्, तस्मिन्नेव समये तस्मिन्वने कयोश्चिद्द्विजदम्पत्योर्मध्ये व्याघ्रे- णानुगत्योपद्रवे क्रियमाणे ताभ्यां निजरक्षणार्थमुच्चैः शब्देन राज्ञः प्रार्थनाकरणम्, तदैव व्याघ्रेणागत्य द्विजपत्न्या ग्रहणम्, तस्योपरि भद्रायुणा वृतेऽपि शस्त्रप्रहारे सर्वशस्त्राणां व्यर्थीभावः, व्याघ्रेण च द्विजपत्न्यां हृतायां द्विजेन शोकपूर्वकं

तस्यै 'सौभाग्यवती पुत्रवती भव' इति मङ्गलाशीःप्रदानम्, ततो ज्ञाततद्वैधव्यवृत्तान्तेन नैध्रुवमुनिना तस्यै शारदायै सौभाग्यप्राप्तये सविस्तरोमामहेश्वरव्रतविधानोपदेशकरणम्, ततस्तया शारदया मुनिप्रोक्तोमामहेश्वरव्रतग्रहणम्, ततस्तस्याः पितृमात्रादिभिः शारदाया वैधव्यदुःखविनाशाय नैध्रुवमहर्षेस्तस्या व्रतस्य यथासांगसमाप्तिपर्यन्तन्तं निवासकरणाय प्रार्थनाकरणम्, तत्प्रार्थनया नैध्रुवमहषेः शारदाकृतस्य व्रतस्य यथासांगसमाप्तिपर्यन्तं तत्रैव मठेऽवस्थितिकरणम् -.... - २०६ १

१९ अथ शारदया तस्य स्वगुरोर्नैध्रुवमहर्षेः संनिधौ स्थित्वैकवर्षपर्यन्तं यथाविध्युमामहेश्वरव्रताचरणम्, ततः संवत्सरांते तस्य व्रतस्योद्यापनकरणम्, उद्यापनदिनस्य रात्रौ तेन नैध्रुवमहर्षिणा तया शारदया सह जपध्यानतपोभिः श्रीजगदम्बायाः संतोषकरणम्, तस्मिन्नवसरे तयोर्भक्तिप्रभावाच्छ्रीजगदम्बायाः प्रादुर्भावः, तदानीमेव श्रीजगदम्बाप्रसादात्तस्यान्धस्य नैध्रुवमहर्षेश्चक्षुर्द्वयप्राप्तिः, ततो नैध्रुवमहर्षिणा तया शारदया सह जगदम्बायाः स्तुतौ कृतायां सुप्रसन्नया जगदम्बया नैध्रुवमहर्षिप्रार्थनया शारदायाः पूर्वजन्मकर्मवर्णनपूर्वकम् 'एतस्याः स्वप्ने स्वपतिना सह रतिसुखप्राप्तिर्भविष्यति' इति वरं प्रदाय शारदायै 'निजगर्भजातपुत्र स्वप्ने कृतभोगस्य पुरुषस्य यदा प्रत्यक्षं दर्शनं करिष्यसि तदा तस्मै देहि' इत्याज्ञां कृत्वान्तर्धानकरणम्, ततः सुप्रसन्नया तया शारदया बालया स्वगुरोनैध्रुवमुनेः पूजासत्कारकरणम्, ततो नैध्रुवमुनेः शारदापित्रो रहसि जगदम्बावर- प्रदानादिवृत्तं संश्राव्य सर्वानामन्त्र्य स्वेच्छया देशान्तरं प्रति गमनम् ,अथ शारदायाः श्रीजगदम्बायाः प्रसादेन स्वप्ने स्वभर्त्रा सह रतिसंभोगकरणाद्गर्भधारणम्,. ततो विधवां तां शारदां गर्भिणीं श्रुत्वा सर्वजनैर्धिक्कारकरणपूर्वकं तस्याः स्वग्रामाद्बहिर्निर्वासनाय सर्वैः सहैकत्र मिलित्वा मन्त्रकरणम्, एवं तैर्जनैर्दुर्विचारे क्रियमाणे सत्याकाशवाण्या तस्याः शारदाया निर्दोषत्वकथनम्, तच्छ्रुत्वा सुप्रसन्नैस्तैः सर्वजनैः स्त्रीजनैश्च शारदायाः सकाशादेकान्ते सहर्षं सत्यवृत्तान्तं विज्ञाय तस्याः प्रशंसां कृत्वा स्वस्वगृहं प्रति गमनम्, अथ शारदायाः पुत्रसन्तानोत्पत्तिः, तस्य शारदे- याख्यत्य शारदापुत्रस्य गुरुणोपनयने कृते सत्युपनयनादनन्तरं चतुर्भिरेव वर्षैश्चतुर्वेदादिसाङ्गोपाङ्गसमग्रविद्यापारंगतावर्णनम् ,अथ कदाचिद्गोकर्णेश्वरमहादेवक्षेत्रं

प्रति कस्मिंश्चिच्छिवमहापर्वणि तद्ग्रामस्थितानां यात्रार्थं प्रयाणे सति तैः सर्वस्व-ग्रामनिवासिभिर्जनैः सह तस्याः शारदाया अपि तेन स्वपुत्रेण सह गमनम् , तत्र तया शारदया नित्यं प्रति स्वप्ने रतिदायिनः पूर्वजन्मीयस्य विप्रस्य स्वभर्तु- दर्शनम्, तेनापि पुरुषेण प्रतिदिनं स्वप्ने रतिदायिन्यास्तस्याः शारदायाः स्वप्ने दृष्टस्य स्वस्मादुत्पन्नस्य तस्य पुत्रस्य च प्रत्यक्षदर्शनम्, ततस्तेन विप्रेण विस्मया-विष्टचित्ततया तत्समीपमागत्य शारदां प्रति तस्या वृत्तान्तजिज्ञासया प्रश्नक- रणम्, ततः शारदया तस्मै सर्वस्ववृत्तान्तनिवेदनम, ततस्तेन विप्रेण तद्दत्तं कुमारं तां शारदां च तस्याः पित्रोरनुज्ञया गृहीत्वा स्वगृहं प्रति गमनम्, ततः कालान्तरे तस्य विप्रस्य मरणोत्तरं चिताग्नौ शारदायास्तेन स्वभर्त्रा सहानुग- मनम, ततस्तयोर्दंपत्योः शिवलोकं प्रति गमनम. इत्थमुमामहेश्वरव्रतप्रभाववर्णनम्. ... ... ... २०७ २

२० अथ रुद्राक्षमाहात्म्यवर्णनम्, तत्र रुद्राक्षधारणपुण्यवर्णनप्रसंगेन काश्मीरदेशनृपति-भद्रसेनसुतस्य सुधर्माख्यस्य राजामात्यसुतस्य तारकाख्यस्य चेत्युभयो राजपुत्रामात्यपुत्रयोर्बाल्यत आरभ्य परममैत्रीभावेन वर्तनम्, उभयोरपि सदैव हेमरत्न-मयालङ्कारपरित्यागपूर्वकं रुद्राक्षधारणेऽत्यन्तप्रेमाणं दृष्ट्वाऽतिविस्मयाविष्टेन राज्ञा भद्रसेनेनेकदा स्वगृहं प्रत्यागतं पराशरमुनिं प्रति पूजाविधिना सत्कृत्य तयोर्बाल-कयो रुद्राक्षधारणाभिरुचिकारणजिज्ञासया प्रश्नकरणम्, ततस्तेन पराशरमह- र्षिणा तयो राजपुत्रामात्यपुत्रयोः पूर्वजन्मवृत्तान्तवर्णनम्, तत्र पूर्वं नन्दिग्राम- निवासिन्या महावैभवशालिन्याः सदा सदाशिवपूजानिरताया महानन्दानाम्न्याः कस्याश्चिद्वेश्यायाः सद्मनि निवसतोः कुक्कुटमर्कटयो रुद्राक्षकृतकर्ण-बाहु-चूडा- भरणयोर्वेश्यया प्रतिदिनं कृतायां नृत्यशिक्षायां प्रावीण्यं प्राप्तयोः प्रतिदिनं तस्या वेश्यायाः शिवाग्रतो नृत्यसमये नृत्यम्, अथ कदाचित्तस्या भवनं कस्य- चिच्छिवव्रतधारिणः शिवयोगिनो वैश्यस्यागमनम्, तत्करे दिव्यरत्नकंकणं दृष्ट्वा तल्लिप्सया तया वेश्यया तस्मै वैश्याय स्वस्या वारांगनात्वे सत्यपि 'त्रिदिन- पर्यन्तं ' तव पत्नीत्वं स्वीकृत्य सहधर्मचारिणीधर्मेणाऽहं त्वां सेविष्ये' इति प्रतिज्ञाकरणम्, ततश्च तेन शिवव्रतपरायणेन वैश्येन तस्या वचनमाकर्ण्य बाढमित्युक्त्वा तस्या हस्ते निजनित्यपूजनीयरत्नमयशिवलिङ्गं दत्त्वैतस्य रत्नमयशिवलिङ्गस्य नाशे मम

प्राणनाशः स्यादिति कथयित्वा तस्य लिङ्गस्यातिप्रयत्नेन संरक्षणायाज्ञाकरणम्, तया महानन्दावेश्यया तस्य वैश्यस्याज्ञां संमान्य तद्दत्तं लिङ्गमादाय नाट्यमण्डपिकास्तम्भोपरि तल्लिंगं निधाय स्वगृहं प्रविश्य रात्रौ तेन वैश्येन पर्यंके सुखेन संगतया निद्राकरणम्, ततो निशीथसमयेऽकस्मादुत्थितेन वह्निना तस्या वेश्यायाः सर्वनाट्यमण्डपस्य दहनम् ,तस्मिन्नवसरे सद्यः प्रबुद्धया तया वेश्यया तत्र सत्वरमेत्य रज्ज्वा शृंखलया च निबद्धयोः तयोः कुक्कुटमर्कटयोः सत्वरं बन्धनतो मोचनम्, मोचितयोस्तयोः कुक्कुटमर्कटयोस्तस्मान्मण्डपस्थलाद्वह्निभीत्या दूरे पलायनम्, सर्वमण्डपदाहे सति मण्डपस्थस्तम्भस्य तदुपरि निहितस्य वैश्यदत्तरत्नमयलिङ्गस्य च दहनेन शकलीभवनम्, तल्लिङ्गनाशं दृष्ट्वा तेन वैश्येन मरणाय निश्चयं कृत्वा चिता- निर्माणाय तां महानन्दावेश्यां प्रत्याज्ञाकरणम्, ततस्तस्य वैश्यस्य दृढनिर्बन्धं दृष्ट्वा तया वेश्यया ग्रामाद्बहिः काष्ठैश्चिताया निर्माणम्, ततः प्रज्वालितायां तस्यां चितायां तेन शिवभक्तेन वैश्येन प्रवेशकरणम्, तं वैश्यं चितां प्रविष्टं दृष्ट्वाऽतिखिन्नया तया महानन्दया वेश्यया तेन त्रिरात्रं पत्नीत्वप्रतिज्ञाना- त्सहधर्मचारिणीधर्मं पुरस्कृत्य शिवभक्तेभ्यः स्वकीयं सर्वस्वं प्रदाय तमग्निं त्रिः परिक्रम्य शिवं स्मृत्वा तस्मिन्नग्नौ पत्यनुगमनाय प्रवेशकरणायोद्यमनम्, तदानीं साक्षाद्भगवता शंकरेण तत्र प्रादुर्भूय तस्या निवारणं कृत्वा स्वस्यैव भक्तिपरीक्षणाय वैश्यरूपेणागमनादि कथयित्वा सर्वपरिवारजनैः सह तस्या महानन्दाया वेश्यायाः शिवलोकं प्रति नयनम्, तत्परिवारजनेष्ववशिष्टयोर्गृह- दहनसमये बन्धनाद्विमुच्य दूरं पलायितयोस्तयोः कुक्कुटमर्कटयोः स्वस्वकालेन मरणे सति मर्कटस्य राजपुत्रत्वं कुक्कुटस्य चामात्यपुत्रत्वं संप्रति संप्राप्तमिति पराशरेण राजपुत्रामात्यपुत्रयोः पूर्वजन्मवृत्तान्तकथनम्... ...... २१०

२१ अथ राज्ञा भद्रसेनेन तस्य राजकुमारस्य भविष्यद्भाग्यविषये पराशरमुनिं प्रति पृच्छायां कृतायां पराशरमुनिना तस्य सुधर्माख्यस्य राजपुत्रस्याद्यदिनात्सप्तमेऽह्नि मृत्युर्भविष्यतीति भविष्यत्कथनम्, तच्छ्रुत्वाऽतिदुःखितं भद्रसेनभूपं प्रति बोध- वचनैः समाश्वास्य तस्य सुधर्माख्यराजपुत्रस्य मृत्युनिवारणाय रुद्राध्यायजपा- नुष्ठानकथनम्, अथ राज्ञः प्रार्थनया रुद्राध्यायपाठपूर्वकं तेन पराशरमुनिना

व्रततपःसदाचारसंपन्नैर्ब्राह्मणैः सह तस्य राजकुमारस्य प्रतिदिनमभिषेके क्रिय- माणे सप्तमेऽह्न्यकस्मात्क्षणमात्रं मूर्छना प्राप्य पुनः सद्य एव प्रबोधनम्, तदानीं तेन कुमारेण मूर्छनावस्थायां मृत्योः शिवदूतस्य चागमनपूर्वकं शिवदूतकृत-मृत्युपराभवकथनम्, ततः पराशरादिभिः सर्वैर्ऋषिभिस्तस्य राजकुमारस्याशीर्वचनं प्रदाय तत्पित्रे राज्ञेऽभयशंसनम्, ततो राज्ञा सर्वेषां ब्राह्मणानां विपुलअम्बायाः भोजनप्रदानादिना सत्कारकरणम्, ततः स्वपुत्रेण पराशरगुरुप्रभृतिमहर्षिभिश्च सह सिंहासन उपविष्टस्य सुप्रसन्नस्य तस्य भद्रसेननृपस्य समीपे महायोगिनः श्रीनारदमहर्षेरागमनम्, ततो भद्रसेनेन राज्ञा कृतपूजासत्क्रियेण नारदेन राजानं प्रति 'तव पुत्रं नेतुं यमस्यात्रागमने सति शंकरेण प्रेषितेन वीरभद्रेण यमस्य शासनं कृतम् इति वर्णनं यमेन वीरभद्रस्य प्रणामपूर्वकं स्तुतिकरणानंतरं वीरभ-द्राद्यममोचनादिवृत्तान्तवर्णनं च, 'रुद्राध्यायपठनपूर्वकाभिषेचनप्रभावात्तव पुत्रस्य मृत्युभीतिनिवारणं जातमस्यायुतवर्षपर्यंतमायुः सकलसौख्यावाप्तिश्च भविष्यति' इत्याशीः प्रदाय नारदस्य गमनम्, पराशरादिमहर्षीणां च सहपुत्राय राज्ञ आशीः प्रदाय स्वस्वाश्रमगमनम्, इत्थं रुद्राध्यायप्रभाववर्णनम्... ..... २११ २

२२ अथ शिबभक्तिमाहात्म्यप्रतिपादक पुण्यमयपुराणकथापठनश्रवणविधिपूर्वक फलवर्णनम्, पुराणश्रवणमाहात्म्यवर्णनप्रसंगेन जारकर्मप्रवृत्तयोर्विदुराख्य ब्राह्मणाधमबिन्दुलाख्यतत्पत्न्योर्वृत्तान्तवर्णनम्, तत्र जारकर्मणा वेश्यासक्तेन विदुराख्यब्राह्मणाधमेन नित्यं जारेण सह संगतामपि कस्मिंश्चिदेकस्मिन्दिने जारेण सह रतासक्तां जारिणीं स्वभार्यां दृष्ट्वा तां प्रति संताड्य 'त्वं जारेभ्यो रतिं दत्त्वा तेभ्यो धनमादाय मह्यं वेश्यायै धनप्रदानाय देहि तेनाहं वेश्यायां रमिष्ये त्वं जारै रमस्व' इत्युक्त्या प्रतिदिनमुभयोरप्यधमयोस्तयोर्दुराचारे प्रवृत्तिः, इत्थं कियता कालेन तस्य ब्राह्मणाधमस्य मरणानंतरं किंचिदुत्क्रान्तयौवनायास्तस्या बिंदुलाख्याया जारोत्पन्नैर्निजपुत्रैः स्वकीयैर्बांधवैश्च सह कदाचित्पर्वविशेषे गोकर्णक्षेत्रं प्रति यात्रार्थं गमनम्, तत्र गत्वा कस्मिंश्चिद्देवालये पौराणिकेन पुराणे वाच्यमाने तया बिंदुलया तस्य पौराणिकस्य मुखात्पुराणश्रवणसमये जारसक्तानां नारीणां स्मरमन्दिरे यमकिङ्कराः संतप्तलोहपरिघं क्षिपन्ति ' इति यमयातनावृत्तांतं श्रुत्वा सततकृत-

स्वकीयजारदुष्कर्मस्मरणसंतप्तहृदयया तया बिंदुलया रहसि तं पौराणिकं ब्राह्मणं प्रति गत्वा निजदुष्कर्मपरिशान्तय उपायजिज्ञासया प्रश्नकरणम्, ततस्तेन पौराणिकेन तस्याः पुराणश्रवणमात्रेण निजघोरव्यभिचारपापस्मरणेनात्युग्रयमयातनाभीताया बिंदुलाख्यायाः सांत्वनपूर्वकं शिवभक्तिपुरःसरशिवनाममन्त्रोच्चारणपूर्वक शिवभक्तिप्रतिपादक पुराणकथाश्रवणोपदेशकरणम्, ततस्तया बिन्दुलया तस्मादेव पौराणिकात्सद्गुरोः सकाशाच्छिवभक्तिवर्द्धकपुराणकथाश्रवणम्, पुराणश्रवणप्रभावात्तस्या विन्दुलायाः शनैःशनै रजस्तमोमलध्वंसे जाते सति हृदये
श्रीशङ्करस्य प्रवेशः, ततः प्रतिदिनं तया गुरूपदिष्टमार्गेण श्रीशङ्करस्य भक्तिक-
रणम्, श्रीशिवभक्तिप्रभावात्तया निखिलकर्मबंधं समाच्छिद्यान्ते शिवलोकं प्रति
गमनम्, तत्र शिवलोके श्रीपार्वतीजगदम्बायाः समीपे गतायास्तस्याः पार्वत्या
संमानकरणम्, ततः पार्वत्याः सकाशान्निजभर्तुः पिशाचत्वप्राप्तिं श्रुत्वा तस्य निजभर्तुः पिशाचयोनेर्मोक्षाय तया तुंबरुंनाम गन्धर्वं प्रति विंध्यशैले स्थिताय निजभर्त्रे पुराणश्रावणार्थं प्रार्थनाकरणम्, तया प्रार्थितेन तुंबरुणा विंध्यशैलं गत्वा
तं पिशाचं प्रति श्रीगौरीपतिकथायाः श्रावणे कृते तस्य पिशाचत्वं प्राप्तस्य बिंदुला-
पतेः पिशाचयोनितो मुक्तिपूर्वकं विमानमारुह्य शिवलोकं प्रति गमनवर्णनम् ,
ततस्तयोर्दंपत्योः श्रीमहेश्वरसद्गुणगायनेन कैवल्यमुक्तिप्राप्तिवर्णनम्, श्रीशिवभ-
क्तिप्रतिपादकब्राह्मोत्तरखण्डपुण्याख्यानवैभववर्णनपूर्वकं ब्राह्मोत्तरखण्डसमाप्तिव-
र्णनम्. - .. - ... २१३ २

इति ब्राह्मखण्डे तृतीयं ब्राह्मोत्तरखण्डं समाप्तम् ।। ( ३-३) ।।

इति श्रीस्कान्दे महापुराणे तृतीयं ब्राह्मखण्डम् ।। ३ ।।